नृपोत्तमे । इति हैमसेदिन्यौ" अनेनास्य सूरीशस्य स्याद्वादशास्त्रपारंगामित्व ज्ञापितं । च नयोपपन्नं नैगमाद्यागमप्रसिद्धैर्नयैरुपपन्नं सयुक्तं ॥ * ॥ नैगमादिनयानां विशेपस्वरूपं नयचक्रसारादिग्रंथतोऽवसेयं ॥ * ॥ अमलं निर्मलमसमंजसालापपरस्परविरोधादिदूपणरहितमितियावत् । एवंविध पूर्वोक्तवर्णनभूपितं तव ते ज्ञानस्वरूपं बोधमहत्वं संत· प्रज्ञा कोविदा· "सन्सुधी कोविदो बुध । इत्यमर·" ॥ * ॥ अनेनास्य मुनीशस्य ज्ञानस्वरूपस्य परमोत्कृष्टत्वं ध्वनितं । यतो यस्य ज्ञानस्वरूपं संतो विद्वांसोऽपि प्रशसंति तस्य ज्ञानस्वरूपस्य परमोत्कृष्टत्वं जगन्मान्यत्वं च निर्विवादमेव ॥ * ॥ प्रवदंति प्रकर्पेण कथयंति ॥ * ॥ अत्र "प्र" इत्युपसर्गेण सतां चेतस्स्वस्य मुनींद्रस्य ज्ञानस्वरूपासत्वस्य गाढतया संलग्नत्वं ध्वनितं । यतस्तद्विना सद्भि प्रकर्पेण तत्प्रशंसा दुर्लभैवेति ॥ * ॥

હે મુનીશ! મિથ્યાત્વિઓના શાસ્ત્રોરૂપી હાથીઓને વિદારણ કરવામાં સિંહસમાન, અને સ્યાદ્વાદના શાસ્ત્રોરૂપી મનોહર માનસ સરોવરમા (ક્રીડા કરવાને) રાજહંસ સમાન, એવું (નૈગમાદિક) નયોવાળુ તમારૂં નિર્મળ જ્ઞાનસ્વરૂપ વિદ્વાનો કહે છે

☞ ॥ अथास्य मुनीशस्य व्यक्तपुरुपोत्तमत्वं दर्शयन्सन्स्तुतिमाह ॥

**त्वत्तः परो मुनिवरेंद्र सदैव लक्ष्मीं ।**
**लब्ध्वा वृथा स्वपुरुषोत्तमतां व्यनक्ति ॥**
**ज्ञात्वा त्वकिंचनमथेति विनिश्चितं त्वां ।**
**व्यक्तं त्वमेव भगवन् पुरुषोत्तमोऽसि ॥२८॥**

॥ त्वत्त इति ॥ हे मुनिवरेंद्र! मुनयो यतयस्तेपु वरा· श्रेष्टास्तेपामपींद्रः पुलोमीपतिरिव नायकस्तत्संबोधनं हे मुनिवरेंद्र! त्वत्त परो भवतोऽन्यो· जिनोक्तचरणकरणरूपसंयममार्गाद्विपरीताचारयुक्तपरिग्रहासक्तो

यतिः । व्यंग्ये तु–परैर्देवरूपमतो विष्णु' । सदैव सर्वदैव लक्ष्मीं धनं । पक्षे–पद्मालयां लब्ध्वाऽधिगम्य स्वपुरुषोत्तमतां निजनरोत्तमत्वं । पक्षे–स्वकीयनारायणत्वं वृथा मुधा व्यनक्ति प्रकाशयति ॥ * ॥ यतो लक्ष्मीलब्धाना पुरुषोत्तमत्व तु दुर्लभमेवेति च लोकप्रसिद्ध ॥ * ॥ अथ च त्वांतु भवतपुनरकिंचनं लक्ष्म्यादिपरिग्रहरहित ज्ञात्वा बुध्वा । इत्येवं निश्चितं निर्णीत मयेति शेष । किं निर्णीतमित्यथाह । हे भगवन् हे महात्म्यवस्त्वमेव भवानेव व्यक्त प्रकटयथास्यात्तथा पुरुषोत्तमोऽसि । पुरुषेषु नरेषूत्तम. श्रेष्ठोऽसि । लक्ष्म्यादिपरिग्रहलब्धत्वाभावादिति ॥

હે મુનિવરેંદ્ર! તમારાથી ઉલટી રીતે વર્તનારો (નામધારી યતિ) (પક્ષે—વિષ્ણુ) હમેશા લક્ષ્મીને (ધનને) મેળવીને પોતાની ફોકટ પુરૂષોત્તમતા પ્રગટ કરે છે, અને તમોને નિષ્પરિગ્રહી જાણીને મે એવો નિશ્ચય કર્યો કે, હે ભગવન્! પ્રગટ રીતે તો તમોજ "પુરૂષોત્તમ છો"

☞ ॥ अथास्मै मुनिंद्राय कविर्नमस्कार कुर्वन्सन्स्तुतिमाह ॥

**जैनेंद्रदर्शनसमुद्रसुधाकराय ।**
**सिद्धांतसारकमलभ्रमरोपमाय ॥**
**अज्ञानसुप्तजनजागरणारुणाय ।**
**तुभ्यं नमो जिन भवोदधिशोषणाय ॥२९॥**

॥ जैनेंद्रेति ॥ हे जिन! हे जित्वर! "जिनोऽर्हति च बुद्धे च । पुंसि स्याज्जित्वरे त्रिषु । इत्युक्तत्वात्" तुभ्यं ते नमो नमस्कारो भवतु । किंविशिष्टाय तुभ्यमित्याह । जैनेंद्रदर्शनसमुद्रसुधाकराय । जैनेंद्रं च तद्दर्शन च जैनेंद्रदर्शन । तदेव समुद्रोऽपानिधिस्तस्य वृद्धये सुधाकराय मृगांकतुल्याय । पुन' किंविशिष्टाय । सिद्धातसारकमलभ्रमरोपमाय । सिद्धांतानामाप्तप्रणितागमानां य. सारस्तत्वं तदेव कमलं नीरजं तस्य र-

सग्रहणे भ्रमरोपमाय द्विरेफतुल्याय । पुनः किंविशिष्टाय । अज्ञानसुप्तजनजागरणारुणाय । अज्ञानमविद्या तस्यां सुप्तानां निद्रितानां प्रलीनानामितियावत् । स्वपरावभासिज्ञानशून्यत्वात् । एवंविधानां जनानां लोकानां जागरणाय निद्रावस्थाविलोपनकृतेऽरुणाय सूर्यतुल्याय "अरुणोऽव्यक्तरागेऽर्के । इत्युक्तत्वात्" ॥ * ॥ यथा भास्करो रजनीसुप्तदेहिनां जागरणं करोति तथा भवानप्यज्ञाननिशानिद्रितजनानां ज्ञानमार्गप्रकाशनेन जागरणं करोषीति गर्भार्थः ॥ * ॥ पुनः किंविशिष्टाय । भवोदधिशोषणाय। भवः संसारः सएवोदधिर्मकराकरः । धीवरैरपि दुस्तरितुं शक्यत्वात् । तस्य शोषणायागस्तिरिव तनुकरणसमर्थाय विनाशकाय । अपुनर्जन्मदायकायेतियावदिति ॥

હે જયશીલ મુનિરાજ! જૈનેંદ્ર દર્શનરૂપી સમુદ્રને વૃદ્ધિ કરવામાં ચંદ્ર સમાન, તથા સિદ્ધાંતોના સારરૂપી કમલપ્રતે ભ્રમરતુલ્ય, અને અજ્ઞાનમાં નિદ્રાવશ થએલા લોકોને જગાડવામાં સૂર્યસમાન, તથા સંસારરૂપી સમુદ્રને શોષનારા એવા તમોપ્રતે નમસ્કાર થાઓ!

☞ ॥ अथास्य सूरींद्रस्य मिथ्यात्विकृतादर्शनं दर्शयन्सन्स्तुतिमाह ॥

**क्रोधोग्रधूम्रनिकरांधितनेत्रयुग्मै ।**
**रज्ञानरात्रितिमिराटनमत्तचित्तैः ॥**
**मिथ्यात्विघूकनिवहैर्भुवि लोकबंधो ।**
**स्वप्नांतरेऽपि न कदाचिदपीक्षितोऽसि ३०**

॥ क्रोधोग्रेति ॥ हे लोकबंधो! लोकानां जनानाप्रति बंधुतुल्यो हितकारित्वात् । तत्संबोधन हे लोकबंधो! । व्यंग्ये तु—हे सूर्य! । भुवि पृथिव्यां मिथ्यात्विघूकनिवहै । मिथ्यात्विन पूर्ववर्णिताज्ञानयुक्तजनास्तएव घूकाः पेचकास्तेषां निवहाः समूहास्तैः कदाचिदपि कस्मिंश्चित्स-

मयेऽपि स्वप्नांतरेऽपि निद्रावस्थायां चित्तविकारजन्यविचारच्छद्मनापि ॥ * ॥ अनेन तेषां गाढदुर्लभत्रोधित्वं सूचितम् ॥ * ॥ नेक्षितोऽसि नो-दृष्टोऽसि भवानिति शेपः । घूकानामपि सूर्यदर्शनदुर्लभत्वं लोकप्रसिद्ध-मेव । किंविशिष्टैर्मिथ्यात्विघूकनिवहैरित्यथाह । क्रोधोग्रधूमनिकराधितने-त्रयुग्मैः । क्रोध· कोप सएवोग्रधूम उत्कटधूम्रस्तस्य निकरो व्रजस्तेनां-धितान्यधत्व प्राप्तानि नेत्रयुग्मानि लोचनयुगलानि येषा ते· । पुन· कि-विशिष्टैरज्ञानरात्रितिमिराटनमत्तचित्तै । अज्ञानं मिथ्याज्ञान तदेव रात्रि-तिमिरं निशासंबधितम । सद्बोधाच्छादनत्वात् । तस्मिन् यदटनं भ्रमणं तस्मिन्मत्तानि हृष्टानि " हृष्टे मत्तस्तृप्त । इत्यमर " तेन वा मत्तानि मदोन्मत्तानि चित्तानि चेतांसि येषा ते । घूकानामपि रात्रितिमिराटनमत्त-चित्तत्वं लोकप्रसिद्धमेवेति ॥

હે લોકબંધુ ! ( પક્ષે-હે સૂર્ય ! ) ક્રોધરૂપી ભયંકર ધુવાડાના સમૂહથી અંધ થએલ છે બન્ને નેત્રો જેમના તથા અજ્ઞાનરૂપી રાત્રિના અંધકારમા હર્ષિત ( અથવા—મદોન્મત્ત ) થયેલ છે ચિત્ત જેમનાં એવા મિથ્યાત્વિઓરૂપી ધુવડોના સમૂહોથી પૃથ્વીમા તમો કોઇ વખતે પણ સ્વપ્નદશામા પણ જોવાએલા નથી

☞ ॥ अथास्य मुनिराजस्य वक्त्र वर्णयन्सन्स्तुतिमाह ॥

**श्यामत्ववारपरिणि:कृतभृंगवृंदं ।**
**केशोच्चयालिपरिचुंबितशीर्षभागम् ॥**
**वक्त्रं मुनीश तव भाति सुधोर्मिगौरं ।**
**बिंबं रवेरिव पयोधरपार्श्ववर्ति ॥ ३१ ॥**

॥ श्यामत्वेति ॥ हे मुनीश! हे यतिनायक! तव ते वक्त्रं मुखं प-योधरपार्श्ववर्ति । पयोधराः सजलमेघास्तेषां पार्श्वे निकटे वर्ति स्थित रवेः

सूर्यस्य बिंबमिव मंडलवद्भाति शोभते । किंविशिष्टं तव वक्त्रमित्याह । श्यामत्ववारपीरणि कृतभृगवृंदकेशोच्चयालिपरिचुंबितशीर्षभागम् । श्यामस्य मेचकस्य भावः श्यामत्वं तस्य वार समूहस्तेन परिणिःकृतं समंतात्तिरस्कृतं भृगवृंदं भ्रमरकदंबकं यैस्ते । एवंविधा ये केशाश्चिकुराः ॥*॥ अनेनास्य मुनीशस्य परमयौवनावस्थायामपि दुष्करजैनवृत्तपालनत्वं ध्वनितं ॥ * ॥ तेषामालि पंक्तिस्तया परिचुंबित आश्लिष्टः खचित इतियावत् । शीर्षभागो मस्तकस्थानं यस्य यस्मिन्वा तत् । पुन. किंविशिष्टं । सुधोर्मिगौरम् । सुधा पीयूषं तस्योर्मयस्तरंगा' " ऊर्मि पीडाजवोत्कंठा—भंगप्राकाश्यवीचिषु । इति हैम. " तद्वच गौरं श्वेतं " गौरः श्वेतेऽरुणे पीते । विशुद्धे चंद्रमस्यपीति हैम' " इति ॥

हे मुनिराज ! श्यामपणाना समूहथी दूर करेल छे भमराओनो समूह जेणे, एवा केशोना समूहनी श्रेणिथी भरेलो छे मस्तकनो भाग जेमा, एवुं तमारु अमृतना मोजा ओसरखु गौर मुख, वादळाओनी समीपमा रहेला सूर्यना बिंबसरखु शोभे छे

☞ ॥ अथ प्रकारांतरेण तस्य मुनिराजस्य वचोमाहात्म्यं वर्णयन्संस्तुतिमाह ॥

**सिद्धांतसारकलितानि हितानि तानि ।**
**भव्ये वचांसि विगतानि हि ते प्रसारम् ॥**
**प्रातर्यथाशु किरणानि महत्प्रभाणि ।**
**तुंगोदयाद्रिशिरसीह सहस्ररश्मेः ॥ ३२ ॥**

॥ सिद्धातेति ॥ हे मुनींद्र ! सिद्धातसारकलितानि । सिद्धांतानामागमानां सारास्तत्वानि तै. कलितानि युक्तानि च हितानि यथार्थत्वेन भव्योपकारकारीणि तानि प्रसिद्धानि ते तव वचांसि वचनानि भव्ये मो-

क्षार्हे जने । जातित्वादेकवचनम् । हीति निश्चयेन प्रसार विस्तारं गतानि प्राप्तानि । कानीवेत्याह । इहास्मिन् जगति प्रातः प्रत्यूषकाले सहस्त्ररश्मेर्मार्तण्डस्य महत्प्रभाणि । महती प्रभा कातिर्येषां तानि महत्प्रभाणि किरणानि मरीचयो यथाशु तूर्ण तुंगोदयाद्रिशिरसीव । तुग उन्नतो य उदयाद्रिः पूर्वाचलस्तस्य शिरसीव शिखरेवेति ॥

હે મુનિરાજ! પ્રભાતમા સૂર્યના મહાન કાતિવાળા કિરણો જેમ તુરત પૂર્વાચલના શિખરપર વિસ્તાર પામે છે, તેમ તમારા સિદ્ધાતોના સારોવાળા તે હિતકારિ વચનો ભવ્ય લોકોપ્રતે ખરેખર વિસ્તાર પામેલા છે

☞ अथास्य मुनिनाथस्याग वर्णयन्सन्स्तुतिमाह ॥

**तेजस्विभिर्ग्रहगणैरिव शिष्यवर्गै ।**
**र्नित्यं मुनीश चरणक्रमसंश्रितैश्च ॥**
**अंगं विभाति तव वेष्ठितमत्र वर्ण्यं ।**
**मुच्चैस्तटं सुरगिरेरिव शातकौंभम् ॥ ३३ ॥**

॥ तेजस्विभिरिति ॥ हे मुनीश! हे यतीश्वर! शिष्यवर्गै । परिवारसमूहैर्वेष्ठित परिवृत्त ते तव वर्ण्य श्रेष्ठमंगं शरीरमत्रास्यां पृथिव्या सुरगिरेर्मेरुपर्वतस्य शातकौभं कार्तस्वरनिर्मितमुच्चैस्तटमिवोन्नतमेखलेव विभाति शोभतइत्युत्प्रेक्षा । अनेनास्य मुनिराजस्य भास्वरकार्तस्वरकातिनिभा शरीरप्रभा ध्वनिता । किंविशिष्टै शिष्यवर्गैरित्यथाह । ग्रहगणैरिव नक्षत्रसमूहैरिवेत्युत्प्रेक्षा । तारकानिकरैर्वेष्ठितं च मेरुतट लोकप्रसिद्धमेव । पुनः किंविशिष्टैस्तेजास्विभि' प्रभावयुक्तै' "तेजो दीप्तौ प्रभावे च । स्यात्पराक्रमरेतसोरिति मेदिनी" ग्रहपक्षे । दीप्तियुक्तै. । च पुनः किंविशिष्टैर्नित्यमनिश चरणक्रमसंश्रितैश्चारित्रपरंपराश्रितैः । ग्रहपक्षे—भ्रमणक्रमाश्रितैरिति ॥

હે મુનીશ ! પ્રભાવવાળા (પક્ષે—કાંતિવાળા) તથા હમેશાં ચારિત્રના ક્રમને આશ્રિત થયેલા (પક્ષે—ભ્રમણના ક્રમને આશ્રિત થએલા) એવા ગ્રહોના સમૂહસરખા શિષ્યોના સમૂહોથી વીંટાએલું તમારૂં ઉત્તમ શરીર આ દુનિયામાં મેરૂ પર્વતના ઉંચાં સુવર્ણતટ સરખું શોભે છે

☞ ॥ अथास्य मुनींद्रस्योदरं वर्णयन्सन्स्तुतिमाह ॥

**मन्ये मुनीश परमोदरगं तवेदं ।**
**सिद्धांतपारग वलित्रयमायतं च ॥**
**संसारसागरशरण्य द्रुतं हि भावि ।**
**प्रख्यापयत्त्रिजगतः परमेश्वरत्वम् ॥ ३४ ॥**

॥ मन्यइति ॥ हे मुनीश ! हे योगींद्र ! । हे सिद्धांतपारग ! सिद्धांता आप्तप्रणितागमास्तेषां पारं तटं गच्छतीति सिद्धांतपारगस्तत्संबोधनं हे सिद्धांतपारग ! हे ससारसागरशरण्य ! संसारसागरः संसृतिरूपाकूपारस्तस्य तरणे पोत इव शरण्यः शरणाय योग्यस्तारणसमर्थ इतियावत् । तत्संबोधन हे संसारसागरशरण्य ! मन्येऽहमेव तर्कयामि । किं तर्कयामीत्यथाह । तव ते इदं प्रसिद्धमायतं विस्तृतं परमोदरग श्रेष्ठशोभान्वितउदरप्राप्तं “सुषमा परमा शोभा । इत्यमरः” वलित्रयं । च पादपूरणार्थे । हीति निश्चयेन द्रुतं तूर्णं त्रिजगतः स्वर्गमृत्युपातालात्मकत्रयाणां लोकानां भाव्यागामिनि काले भविष्यत्परमेश्वरत्वं महेश्वरत्व तीर्थकरत्वमितियावत् । प्रख्यापयत् प्रकर्षेण ख्यापयत्सूचयदस्तीति शेषः ॥ * ॥ एवं विश्वस्यासाधारणगुणगणमाणिमाणिक्यनिकरमकराकरायमाणस्यास्य सूरीश्वरस्यानेकनिर्जरनिकरनायकसेव्यतीर्थकरत्वातिसुलभता निर्विवादैवेति ॥ * ॥

હે મુનિરાજ ! હે સિદ્ધાંતોના પાર ગામી ! તથા હે સંસારરૂપી સાગરથી

तरवाने शरणा३५। हुं એમ માનુ છું કે, ઉત્કૃષ્ટ શોભાવાળા ઉદરપર રહેલી આ તમારી વિસ્તારવાળી ત્રણ વળીઓ ખરેખર તુરત થનારા ત્રણે જગતના પરમેશ્વરપણાને (તીર્થંકરપણાને) સૂચવનારી છે.

☞ ॥ हे मुनिराज! "एवंविधं भावि तव तीर्थकरत्व त्वास्तां। परं-
तु तव वाचं श्रुत्वा भव्यजना अपि तीर्थकरपदमधिगमिष्यंति"
इति वर्णयन्सन्नथ तस्य मुनींद्रस्य स्तुतिमाह ॥

**वाचंयमेश तव वाचममोघपुण्यां।**
**श्रुत्वाप्य तं सपदि तीर्थकरत्वभावम्॥**
**धर्मं जना उपदिशंति च कांचनानि।**
**पद्मानि तत्र विबुधाः परिकल्पयंति॥३५॥**

॥ वाचंयमेशेति ॥ हे वाचंयमेश! हे मुनींद्र! तव ते अमोघपुण्यां। न मोघं निरर्थकममोघ "मोघ त्रिपु निरर्थके। इत्युक्तत्वात्" एवंविधं पुण्यं सुकृत "स्याद्धर्ममस्त्रियां पुण्य–श्रेयसी सुकृत वृष। इत्यमरः" यस्यां तां वाचं वाणीं श्रुत्वाकर्ण्य सपदि तूर्ण नतु चिरकालानंतरं। अनेनास्य मुनीशस्य वाच परममहत्वं ध्वनितम्। त प्रसिद्ध तीर्थकरत्व-भावमार्हत्यावस्थामाप्य लब्ध्वा जना भव्या धर्मं। मोक्षमार्गमुपदिशंति दर्शयंति। लोकयिष्यंतीति गर्भार्थ। भक्तिसभ्रमोक्तित्वादेव वर्तमाननिर्दे-शोऽदुष्टएव। च पुनस्तत्रोपदेशस्थानके विबुधा निर्जरा. कांचनानि सुव-र्णनिर्मितानि पद्मानि कमलानि परिकल्पयंति रचयंतीति ॥

હે મુનિરાજ! સાર્થક પુણ્યવાળી તમારી વાણી સાભળીને તુરત તીર્થંકરપણું મેળવીને લોકો ધર્મનો ઉપદેશ દીએ છે; તથા ત્યા દેવો સુવર્ણના કમળો બનાવે છે.

☞ ॥ अथ प्रकारांतरेणास्य मुनिवरस्योपदेशमाहात्म्यं दर्शयन्सन्स्तुतिमाह ॥

**भव्यांगिनां तव मुनींद्र यथोपदेशो ।**
**धत्ते पदं न च तथैव परस्य मह्याम् ॥**
**याहक्प्रभामृतकरस्य हि मुत्प्रदात्री ।**
**ताहक्कुतो ग्रहगणस्य विकासिनोऽपि ॥३६॥**

॥ भव्यांगिनामिति ॥ हे मुनींद्र ! हे यतीश ! तव भवत उपदेशो धर्मसंबंधिहितकथन भव्यागिनां भव्या मोक्षार्हा अंगिनो देहिनस्तेषां प्रतीति शेपः । पद स्थानं यथा धत्ते धारयति तथैव परस्य त्वदन्यस्य परधर्मोपदेशकस्येतियावत् मह्यां पृथिव्यां नच नैव "चः पादपूरणे पक्षां–तरे हेतौ विनिश्चये । इति त्रिकांडशेप" उपदेशो नैव पदं धत्त इति भावार्थः । अथैतदृष्टांतेन समर्थयन्सन्नाह । हि यतोऽमृतकरस्य । अमृतयुक्ताः पीयूपयुक्ता करा अंशवो यस्य कलानिधेरितियावत् । प्रभा, कांतिर्याहक् यथा मुत्प्रदात्री हर्पदायिन्यस्तीति शेपः । ताहक् तथा विकासिनोऽपि भास्वरस्यापि ग्रहगणस्य नक्षत्रसमूहस्य कुतः क्वास्तीति शेपः । नास्त्येवेति । एवं ग्रहसमूहस्यापि प्रभा यदा चंद्रतुल्या नास्ति तदैकस्य ग्रहस्य तु का वार्ता । एवं च त्वत्परसमूहस्याप्युपदेशनिर्बलत्वं यद्यस्ति तदा तदेकस्योपदेशनिर्बलत्वे तु का वार्तेति गर्भार्थ इति ॥

हे मुनींद्र ! आपनो उपदेश जेवी रीते भव्य प्राणीओप्रते स्थानकने धारण करे छे, तेवीज रीते अन्य दर्शनीओनो उपदेश धारण करी शकतो नथीज ; केमके, चंद्रनी कांति जेवी (लोकोने) हर्ष आपनारी छे, तेवी विकस्वर एवा पण ग्रहोना समूहनी क्या छे ?

॥ अथ प्रकारांतरेणास्य मुनिवरस्योपदेशमाहात्म्यं दर्शयन्सन्स्तुतिमाह ॥

**भव्यांगिनां तव मुनींद्र यथोपदेशो ।**
**धत्ते पदं न च तथैव परस्य मह्याम् ॥**
**यादृक्प्रभामृतकरस्य हि मुत्प्रदात्री ।**
**तादृक्कुतो ग्रहगणस्य विकासिनोऽपि ॥३६॥**

॥ भव्यांगिनामिति ॥ हे मुनींद्र ! हे यतीश ! तव भवत उपदेशो धर्मसंबधिहितकथनं भव्यागिनां भव्या मोक्षार्हा अंगिनो देहिनस्तेषां प्रतीति शेष । पद स्थानं यथा धत्ते धारयति तथैव परस्य त्वदन्यस्य परधर्मोपदेशकस्येतियावत् मह्यां पृथिव्यां नच नैव “ चः पादपूरणे पक्षां–तरे हेतौ विनिश्चये । इति त्रिकांडशेष ” उपदेशो नैव पदं धत्त इति भावार्थः । अथैतदृष्टांतेन समर्थयन्सन्नाह । हि यतोऽमृतकरस्य । अमृतयुक्ताः पीयूषयुक्ता करा अंशवो यस्य कलानिधेरितियावत् । प्रभा कांतिर्यादृक् यथा मुत्प्रदात्री हर्षदायिन्यस्तीति शेषः । तादृक् तथा विकासिनोऽपि भास्वरस्यापि ग्रहगणस्य नक्षत्रसमूहस्य कुतः क्वास्तीति शेष. । नास्त्येवेति । एवं ग्रहसमूहस्यापि प्रभा यदा चंद्रतुल्या नास्ति तदैकस्य ग्रहस्य तु का वार्ता । एवं च त्वत्परसमूहस्याप्युपदेशनिर्बलत्वं यद्यस्ति तदा तदेकस्योपदेशनिर्बलत्वे तु का वार्तेति गर्भार्थ इति ॥

હે મુનીંદ્ર ! આપનો ઉપદેશ જેવી રીતે ભવ્ય પ્રાણીઓપ્રતે સ્થાનકને ધારણ કરે છે, તેવીજ રીતે અન્ય દર્શનીઓનો ઉપદેશ ધારણ કરી શકતો નથીજ; કેમકે, ચંદ્રની કાંતિ જેવી (લોકોને) હર્ષ આપનારી છે, તેવી વિકસ્વર એવા પણ ગ્રહોના સમૂહની ક્યાં છે ?

☞ ॥ अथास्य मुनीशस्य चरणमाहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

**संसारतोयनिधितारणयानरूपौ ।**
**लक्ष्मीप्रभूतपरमध्वजमंडितौ च ॥**
**पादौ मुनीश भवतो भवतो जनानां ।**
**दृष्ट्वा भयं भवति नो भवदाश्रितानाम् ३७**

॥ संसारेति ॥ हे मुनीश ! हे यतींद्र ! भवतस्तव पादौ चरणौ दृष्ट्वा विलोक्य । अनेन तच्चरणसेवाफलं तु तस्मादप्यधिकतरं सूचितम् । भवदाश्रितानां भवंतं त्वामाश्रिताना संश्रितानांभवद्दत्तोपदेशस्यानुवर्तन कुर्वतामिति यावत् । अनेन तदाश्रयंविना केवल तत्पादालोकनमात्रकुर्वतां जनानां निरास कृत । जनाना लोकानां भवत संसारतो भयं साध्वसं नो भवति न विद्यते । किं विशिष्टौ पादावित्याह । ससारतोयनिधितारणयानरूपौ । संसारो भव. सएव तोयनिधिर्यादःपतिस्तस्मात्तारणे परतटप्राप्तिदाने यानरूपौ पोततुल्यौ । च पुनः किंविशिष्ठौ लक्ष्मीप्रभूतपरमध्वजमडितौ लक्ष्मीप्रभूतौ सामुद्रिकशास्त्रोक्तचिन्हविशेषरूपौ । एवभूतौ यौ परमध्वजौ श्रेष्ठकेतने ताभ्या मंडितौ शोभितौ । नौरपि लक्ष्मीप्रभूतध्वजमडिता लोकप्रसिद्धैवेति ॥

હે મુનીશ ! સ સારરૂપી સમુદ્રથી તારનારા વહાણ સરખા તથા ચિન્હરૂપ થએલી ઉત્કૃષ્ટ ધજાઓથી મ ડિત થએલા એવા તમારા ચરણોને જોઇને તમોને આશ્રિત થએલા લોકોને સ સારથી ભય થતો નથી

☞ ॥ अथास्य मुनिराजस्य प्रकारातरेण चरणमाहात्म्यं
वर्णयन्सन्स्तुतिमाह ॥

**आक्रांतलोकनिवहो भटकोटिकल्पो ।**

दामोदरादिसुरसंहतिनाप्यजेयः ॥
एवंविधोऽपि मदनो मुनिराज भव्यं ।
नाक्रामति क्रमयुगाचलसंश्रितं ते ॥ ३८ ॥

॥ आक्रांतेति ॥ हे मुनिराज ! हे वाचंयमेश ! आक्रांतलोकनिवह आक्रांत आक्रमण नीतो लोकनिवहो जनसमूहो येन स । मरणावधिकष्टदायित्वात् । च भटकोटिकल्पो भटानां वीराणां कोटयो भटकोटयस्तत्कल्पस्तत्सन्निभो दुर्जेयत्वात् । च दामोदरादिसुरसंहतिनाप्यजेयः । दामोदरो नारायण स आदिर्येषा ते दामोदरादयः सुरा देवास्तेषां संहतिनापि समूहेनाप्यजेयो जेतुमशक्य. । यदाह भर्तृहरि — " शंभुस्वयंभुहरयो हरिणेक्षणानां । येनाक्रियंत सततं गृहकर्मदासाः " एवं विधोऽपीत्थंप्रकारोऽपि मदनो मन्मथस्ते भवतः क्रमयुगाचलसंश्रितं क्रमयुगं चरणद्वंद्वं तदेवाचल. पर्वतस्तंप्रति संश्रितमाश्रितं भव्यं मोक्षार्हं जनं नाक्रामति नो पराभवति । अद्रिस्थितजनं जेतु वीरेशोऽपि नैव शक्नोतीति च लोकप्रसिद्धमेवेति ॥

હે મુનિરાજ ! આક્રમણ કરેલ છે લોકોનો સમૂહ જેણે, તથા ક્રોડો સુભટોસરખો ( બળવાન ) અને વિષ્ણુ આદિક દેવોના સમૂહોથી પણ ન જીતી શકાય તેવો પણ કામદેવ તમારા બન્ને ચરણોરૂપી પર્વતને આશ્રિત થએલા ભવ્ય માણસને આક્રમણ કરી શકતો નથી.

☞ ॥ अथास्य मुनीशस्य नाम्नो माहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

क्रोधादिधूमनिकरांधितलोकनेत्रं ।
भार्यांगजादितृणकाष्टविवर्धितं च ॥
वाचंयमेंद्र किल कर्मकृपीटयोनिं ।

**त्वन्नामकीर्तनजलं शमयत्यशेषम् ॥ ३९ ॥**

॥ क्रोधादीति ॥ हे वाचंयमेंद्र ! हे मुनींद्र ! क्रोधादिधूमनिकरांधितलोकनेत्रं । क्रोधः कोप आदिर्येषा ते क्रोधादय क्रोधमानमायालोभास्तएव धूमनिकरो धूम्रसमूहस्तेनाधितान्यंधत्व नीतानि लोकनेत्राणि जनलोचनानि यस्मात्स त च पुनर्भार्यागजादितृणकाष्टविवर्धितं । भार्या महिला अंगजा. पुत्रा आदिर्येषा ते भार्यागजादय आदिशब्दाद्भ्रातृदुहितृसुहृदादयोऽपि । तएव तृणकाष्टानि तैर्विवर्धितं विशेषेण वृद्धिं प्राप्तं । एवंविधमशेष समस्तं कर्मकृपीटयोनिं । कर्माणि । आत्मना मिथ्यात्वादिहेतुभि परपुद्गलसबंधलक्षणानि ज्ञानावरणादीनि तान्येव कृपीटयोनिराग्नि ॥ * ॥ “ कृपीटयोनिर्ज्वलनो । इत्यमरः ” कृपीटस्य जलस्य योनि । ‘ कृपीटमुदरेजले ’ इति रत्नकोपः । ‘ अग्नेरापः ’ इति श्रुते । कृपीटं योनिरस्येति वा । ‘ अद्भ्योऽग्निर्ब्रह्मत क्षत्रम् ’ इति मनु ॥ * ॥ तं किलेति निश्चयेन त्वन्नामकीर्तनजलं । त्वन्नाम भवदभिधानं तस्य कीर्तनं कथनं स्मरणमितियावत् । तदेव जलं पानीय शमयति शांतता नयति विध्यापयतीतियावत् । मोक्षं प्रयच्छतीति गर्भार्थ इति ॥

હે મુનીંદ્ર ! ક્રોધાદિકરૂપ ધુમાડાના સમૂહથી આંધળા થએલ છે લોકોના નેત્રો જેનાથી તથા સ્ત્રી, પુત્રાદિકરૂપ ઘાસ અને કાટોથી વૃદ્ધિ પામેલા એવા કર્મરૂપી અગ્નિને ખરેખર તમારા નામના કીર્તનરૂપી પાણી ઠારી નાખે છે

☞ ॥ पुनरपि प्रकारांतरेणास्य मुनीशस्य नाम्नो माहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

**कूटोपदेशविषवारविदग्धलोक ।**

**मिथ्यात्विनायकभुजंगमसंचयश्च ॥**

**नैवं कदर्थयति तं हि कदापि लोके ।**

**त्वन्नामनागदमनी हृदि यस्य पुंसः ॥ ४० ॥**

॥ कूटोपदेशेति ॥ हे मुनीश ! यस्य पुंसः पुरुषस्य हृदि मानसे त्वन्नामनागदमनी । त्वन्नाम भवदभिधानं तदेव नागदमनी सर्पविषध्वंसक्षमावल्लिरस्तीति शेषः । तमेतं पुमांसं लोकेऽस्मिन् जगति कदापि कस्मिंश्चिद्दिवसेऽपि । कूटोपदेशविषवारविदग्धलोकामिथ्यात्विनायकभुजंगमसंचयः । कूटो दंभयुक्तो य उपदेशो धर्मसंबंधिहितकथनं तदेव विषवारो गरलव्रजस्तेन विदग्धा भस्मीकृताः । दुर्गतिगमनार्हीकृता इति गर्भार्थः । लोका जना यैस्ते । एवंविधा ये मिथ्यात्विनायकाः परधर्मगुरवस्तएव भुजंगमाः । 'भुजेन कौटिल्येन गच्छन्तीति भुजगमाः ' सरीसृपास्तेषां संचयो निकरः । च पादपूरणार्थे । हीति निश्चयेन नैव नैव " एवं प्रकारोपमयो—रंगीकारेऽवधारणे । इति धराणिः " कदर्थयति दुःखयतीति ॥

हे मुनीश ! जे पुरुषना हृदयमा तमारा नामरूपी नागदमनी नामनी औषधि छे, ते पुरुषने आ लोकमा, जूठा उपदेशरूपी झेरना समूहथी भस्मरूप करेल छे लोकोने जेओए, एवा मिथ्यात्विओना नायकोरूपी सर्पोनो समूह खरेखर कोइपण दिवसे पराभव करी शकतो नथी

॥ अथास्य मुनिराजस्य कीर्तनफलं दर्शयन्सन्स्तुतिमाह ॥

**सूरीश भूरिभवभंगिभरार्जिताघं ।**
**भव्यांगिनां जनितदुःखसमूहमुग्रम् ॥**
**मार्तंडमंडलविभाभरतः प्रभाते ।**
**त्वत्कीर्तनात्तम इवाशु भिदामुपैति ॥ ४१ ॥**

॥ सूरीशेति ॥ हे सूरीश ! हे आचार्येंद्र ! भव्यांगिनां । भव्या मोक्षार्हा येऽगिनो देहिनस्तेषां जनितदुःखसमूहम् । जनित उत्पादितो

दुःखानामापदां समूहः प्रकरो येन तत् । चोग्रमुत्कटमेवंविधं भूरिभवभंगिभरार्जिताघं । भूरयो बहवो भवा जन्मानि तेषां भंगयः प्रकारास्तेषां भरः समूहस्तस्मिन्नर्जितं प्राप्तमघं पापं त्वत्कीर्तनाद्भवत स्तवनादाशु चपलं भिदां नाशमुपैति प्राप्नोति । कइवेत्याह । मार्तंडमंडलविभाभरत. मार्तंडस्य विकर्तनस्य ॥ * ॥ " विकर्तनार्कमार्तंड । इत्यमर. " मृतेऽण्डे भवो मार्तंडः । शकंध्वादिः ( वा० ६ । १ । ९४ ) मार्ताण्डोऽपि । 'परामार्ताण्डमास्यत्' । 'पुनर्मार्ताण्डमाभरत्' इत्यादिमंत्राद्दीर्घोऽपि । 'अथ मार्तंडमार्ताण्डौ' इति नामनिधानशब्दार्णवौ च ॥ * ॥ यन्मंडलं बिंबं तस्य विभाभरत. कांतिस्तोमत. प्रभाते प्रत्यूषकाले तमइवांधकारवदिति ॥

हे सूरीश्वर! उत्पन्न करेल छे दु:खोनो समूह जेणे तथा भयंकर एवुं भव्य प्राणीओनु घणा भवोना प्रकारोना समूहमा मेळवेलु पाप, प्रभातमां सूर्यना बिंबनी कांतिना समूहथी जेम अंधकार, तेम तमारा कीर्तनथी तुरत नाश पामे छे

☞ ॥ अथ प्रकारांतरेणास्य मुनीशस्य चरणमाहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

**संसारतापपरितापितमंगमेत**
**द्विष्ठाद्यनिष्टमिह हि प्रविहाय तूर्णम् ॥**
**एकांतशांतपदमव्ययमोक्षरूपं ।**
**त्वत्पादपंकजवनाश्रयिणो लभंते ॥ ४२ ॥**

॥ ससारेति ॥ हे मुनींद्र! ससारतापपरितापितम् । संसारो भवस्तस्मिन्यस्ताप आतप खेद इतियावत् । तेन परितापितं समंताद्दुःखं नीतम् । च विष्ठाद्यनिष्टं विष्ठा पुरीषमादिर्येषां ते विष्ठादयः । आदिशब्दाद्रुधिरास्थिमासमेदादयोऽपि । तैरनिष्ठ निंद्यं । एवंविधमेतत्प्रसिद्धमंगं शरीर-

मिहास्मिन् जगति हीतिनिश्चयेन तूर्णं द्रुतं प्रविहाय प्रकर्षेण त्यक्त्वा । अव्ययमोक्षरूपं । अव्यय. क्षयरहितो यो मोक्षोऽपवर्गः सएव रूपं स्वरूपं यस्य । एवंविधं ॥ एकातशांतपदम् । एकांतशातं विषयकषायादिभी-रहितं पद स्थानं लभंतेऽधिगच्छंति । केऽधिगच्छंतीत्यथाह । त्वत्पाद-पंकजवनाश्रयिण. । त्वत्पादौ भवच्चरणौ तावेव पंकजवनं कमलकाननं तदाश्रयिणस्तत्प्रति शरणं गताः । युष्मदङ्घ्रिसेवका जना इति भावार्थः । पंकजवनाश्रयिणां च तापनिवृत्तिर्लोकप्रसिद्धैवेति ॥

હે મુનીંદ્ર ! તમારા ચરણોરૂપી કમળવનને આશ્રિત થએલા માણસો; સંસારના તાપે તાપયુક્ત કરેલા, તથા વિષ્ટાદિકથી નિંદનિક એવા આ શરીરને અહીં ખરેખર તુરત તજીને, અક્ષય મોક્ષરૂપ એવા એકાંત શાંતપદને મેળવે છે.

☞ ॥ अथास्य मुनिराजस्य स्मरणमाहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

**छेदप्रभेदनविकुट्टनताडनादिं ।**
**तीर्यंचनारकमनुष्यभवप्रभूतम् ॥**
**मुक्तिं विमुक्तसकलापदमत्र भव्या ।**
**त्रासं विहाय भवतः स्मरणाद्व्रजंति ॥४३॥**

॥ छेदप्रभेदेति ॥ हे मुनींद्र ! अत्रास्मिँल्लोके भव्या मोक्षार्हा देहिनो भवतस्तव स्मरणात्स्मृतेस्त्रास भय विहाय त्यक्त्वा । विमुक्तसकलापदम् । विमुक्ता विशेषेण त्यक्ता सकला समस्तापद्विपत्तिर्यया सा तां चिदानंदरू-पत्वात् । एवंविधां मुक्ति मोक्षं व्रजति प्रयांति । किंविशिष्टं त्रासमित्य-थाह । छेदप्रभेदनविकुट्टनताडनादि । छेदश्छेदनमंगद्वैधीकरणमितियावत् । " छिदिर् द्वैधीकरणे " प्रभेद प्रकर्षेण शरीरविदारणं । विकुट्टनं मुश-लादिभिः कृतशरीरपराभवः । ताडनं यष्ट्यादिभि. कृतप्रहारः त आदि-

-र्यस्य स तम् । पुनः किंविशिष्टं त्रासं । तीर्यंचनारकमनुष्यभवप्रभूतं । पशुश्वभ्रमनुजजन्मोत्पन्नमिति ॥

હે સૂરીશ્વર! આપના સ્મરણથી અહીં ભવ્યલોકો, તિર્યંચ, નારકી, તથા મનુષ્યભવથી ઉત્પન્ન થએલા, છેદન, ભેદન, તાડન આદિક ત્રાસને તજીને, સર્વ આપદાઓથી રહિત એવા મોક્ષપદને જાય છે

☞ ॥ अथास्य मुनींद्रस्य रत्नत्रयमाहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

**रत्नत्रयं मुनिवरेंद्र विलभ्य भव्या ।**
**स्त्वत्तो भवाहिशमनौषधरूपमत्र ॥**
**मुक्तिस्त्रियोऽपि गतरूपविभा ह्यभीष्टा ।**
**मर्त्या भवंति मकरध्वजतुल्यरूपाः ॥ ४४ ॥**

॥ रत्नत्रयमिति ॥ हे मुनिवरेंद्र! मुनयः सामान्ययतयस्तेषु वराः प्रधाना आचार्यादयस्तेष्वपि शक्रइव श्रेष्ठस्तत्संबोधनं हे मुनिवरेंद्र! हे वाचंयमेश! भव्या मोक्षार्हा मर्त्या जना अत्रास्मिन् जगति त्वत्तो भवतो रत्नत्रय सम्यग्ज्ञानदर्शनचारित्ररूपाणि त्रिरत्नानि विलभ्याधिगम्य मुक्तिस्त्रियोऽपि मोक्षरूपवरवर्णिन्या अपि ॥ * ॥ अत्र "अपि" शब्देन मुक्तिस्त्रियः सामान्यजनाना दुर्लभत्व ध्वनित ॥ * ॥ हीति निश्चयेनाभीष्टा वांछिता भवति । कि विशिष्ट रत्नत्रयमित्याह । भवाहिशमनौषधरूप । भवः ससार सएवाहिः सर्पो दुःखदायित्वात्तस्य शमने शांतय औषधरूप भेषजतुल्यं । भुजगमाविषध्वसने रत्नानां क्षमत्व प्रसिद्धमेव । अथ ते भव्या मर्त्याः कथ सतोऽभीष्टा भवतीत्याह । गतरूपविभाः । गता नष्टा रूपविभा देहसंबंधिरूपकातिर्येषा ते । सिद्धानामशरीरित्वप्रसंगात् । व्यंग्ये तु गतसौंदर्यकांतिनामपि पुरुषाणांप्रति स्त्रियो मोहप्रसंग

आश्चर्यसूचक एव । पुनः कथं संत इत्याह । मकरध्वजतुल्यरूपाः । मकरध्वज कंदर्पस्तस्य तुल्यं रूपं येषां ते । मकरध्वजतुल्यरूपाणां पुरुषाणांप्रति स्त्रियो मोहप्रसंगस्तु युक्त एव । ननु "गतरूपविभा" च "मकरध्वजतुल्यरूपाः" इति द्वयोरपि विशेषणयोर्मध्ये विरोधप्रसंगः । नैवं । मकरध्वजतुल्यरूपा इत्यनंगतुल्यरूपा अशरीरिण इति यावदिति ॥

હે મુનિવરેંદ્ર! ભવરૂપી સર્પને શાંત કરવામાં ઔષધરૂપ એવા (સમ્યગ્ જ્ઞાન, દર્શન, ચારિત્રરૂપી) ત્રણ રત્નોને અહીં મેળવીને ભવ્ય માણસો ખરેખર રૂપકાંતિરહિત થયા થકા, તથા કામદેવ સરખા રૂપવાળા થયા થકા મુક્તિરૂપી સ્ત્રીને પણ વહાલા થાય છે

☞ ॥ अथ प्रकारांतरेणास्य मुनीशस्य वचोमाहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

**भव्या मुनीश तव वागमृतं निपीय ।**
**हास्येंदुनिर्गतममूल्यरसप्रवाहम् ॥**
**आनंददामतुलभां प्रविलभ्य मुक्तिं ।**
**सद्यः स्वयं विगतबंधभया भवंति ॥ ४५ ॥**

॥ भव्याइति ॥ हे मुनीश! हे योगींद्र! इहास्मिन् जगति भव्या मोक्षार्हा जनास्तव त आस्येंदुनिर्गतमास्यं मुखं तदेवेंदुश्चंद्रस्तस्मान्निर्गतं निःसृतं प्रादुर्भूतमितियावत् । चामूल्यरसप्रवाहं । अमूल्योऽनर्घ्यो रसप्रवाहः शाताख्यरसप्रवृत्तिर्यस्मिंस्तत्तत् "प्रवाहस्तु प्रवृत्तिः स्यादित्यमरः" एवंविधं वागमृत । वाग् वाणी सैवामृतं पीयूषं तन्निपीय पीत्वा । आनंददां प्रमोदप्रदां चातुलभां । अतुला निरुपमा भा कांतिर्यस्यास्तामेवंविधां मुक्तिं मोक्षं प्रविलभ्याधिगम्य सद्यो द्रुतं स्वयं स्वयमेव विगतबंधभया विगतो नष्टो बंधभयः कर्मबंधनदरो येषां ते । एवंविधा भवंतीति ॥

હે મુનીશ ! આ જગતમા ભવ્યલોકો તમારા મુખરૂપી ચંદ્રથી નિકળેલાં અમૂલ્ય રસપ્રવાહવાળા વાણીરૂપી અમૃતને પીને, આનંદ આપનારી, તથા નિરૂપમકાંતિવાળી મુક્તિને મેળવીને તુરત પોતાની મેળે કર્મબંધનોના ભયથી રહિત થાય છે.

☞ ॥ अथास्य मुनीशस्य स्तवमाहात्म्यं वर्णयन्सन्स्तुतिमाह ॥

**भव्यव्रजो भवति वै भवतोऽभिमुक्तो ।**
**वाचंयमेश निखिलं प्रविहाय पापम् ॥**
**साहित्यसाररसने रसनारसज्ञो ।**
**यस्तावकं स्तवमिमं मतिमानधीते ॥ ४६ ॥**

॥ भव्यव्रजइति ॥ हे वाचंयमेश ! हे मुनींद्र ! साहित्यसाररसने रसनारसज्ञः । साहित्यस्यालंकारविषयस्य ध्वन्यादिकाव्यमर्मणइतियावत् । यो सारस्तत्व तस्य रसने स्वदने "रसन स्वदने ध्वनौ । इति मेदिनी" रसनारसज्ञ । जीह्वास्वादस्य ज्ञाता । च मतिमान् बुद्धिमान् । एवंविधो यो भव्यव्रजो मोक्षार्हजनसमूहस्तावकं भवत्संवधिनमिममेनं स्तवं स्तुतिमधीते स वै निश्चयेन "स्युरेवं तु पुनर्वैवे–त्यवधारणवाचकाः । इत्यमरः" निखिलं समस्तं पापमघ प्रविहाय प्रकर्षेण त्यक्त्वा भवत संसारतोऽभिमुक्तः समताद्रहितो भवति जायते मोक्षं प्रयातीतियावदिति ॥

હે મુનિરાજ ! અલંકારના સારનો સ્વાદ લેવામા જીહ્વાના રસને જાણનારો જે બુદ્ધિવાન ભવ્યલોકોનો સમૂહ તમારી આ સ્તુતિ ભણે છે, તે ખરેખર સર્વ પાપને તજીને સંસારથી રહિત થાય છે

☞ ॥ अथ पुनरप्यस्य मुनीशस्य प्रकारांतरेण स्तवनमाहात्म्यं वर्णयन्नुपसंहरन्सन्स्तुतिमाह ॥

**एवंविधां स्तुतिमिमामनवद्यरूपां ।**

काव्यज्ञचित्तरसदां गुरुभक्तिरम्याम् ॥
नित्यं जनः पठति यः पुरुषोत्तमं हि ।
तं मानतुंगमवशा समुपैति लक्ष्मीः ॥ ८७॥

॥ एवंविधामिति ॥ एवंविधामित्थंप्रकारामनवद्यरूपामगर्ह्यस्वरूपां च काव्यज्ञचित्तरसदा । काव्यं जानंतीति काव्यज्ञास्तेषां चित्तेषु मनस्सु रसदां स्वादप्रदां । च गुरुभक्तिरम्यां । गुरोः श्रीविजयानंदसूरीश्वरस्य या भक्तिः सेवा तया रम्यां मनोहरा । इमां पूर्वोक्तां स्तुति स्तवनं यो जनो मनुष्यः नित्यं सर्वदा पठति भणाति तमेत मानतुंगं । मानेन चित्तोन्नत्या "मान प्रमाणे प्रस्थादौ । मानश्चित्तोन्नतौ ग्रहे । इति हैमः" तुंगमुन्नतं पुरुषोत्तम । पुरुषेषु नरेषूत्तमं श्रेष्ठं हीतिनिश्चयेनावशा दुर्लभा लक्ष्मीः कमलासना समुपैति सम्यक्प्रकारेण प्राप्नोतीति ॥

એવી રીતની આ અનવદ્યસ્વરૂપવાળી તથા કાવ્યોના જાણનારોને સ્વાદ આપનારી, અને ગુરૂભક્તિથી મનોહર થએલી સ્તુતિને જે માણસ હમેશાં ભણે છે, તે ચિત્તોન્નતિથી ઉન્નત થએલા ઉત્તમ પુરૂષને ખરેખર દુર્લભ લક્ષ્મી પ્રાપ્ત થાય છે

[1]शिष्यैर्युक्तो मुनिपतिरथो पादलिप्ताद्विहृत्य ।
सोऽप्यागाद्राधनपुरमरं भव्यलोकोपकारी ॥

१ ત્યાર પછી શ્રી આત્મારામજી ત્યાંથી નીકળીને વળા, બોટાદ, લીંબડી, વઢવાણ અને લખતર થઇને શ્રી મલ્લીનાથસ્વામીજીની યાત્રા માટે ભોયણીજી પધાર્યા ત્યાંથી શંખેશ્વર પાર્શ્વનાથજીની યાત્રા કરીને રાધણપુર થઇ પાટણ પધાર્યા ત્યાંથી તેમણે કેટલાક નવીન પુસ્તકો પ્રાપ્ત કર્યા રાધણપુરના શ્રાવકોના આગ્રહથી પાછા તેઓ ત્યાં પધાર્યા અને સંવત ૧૯૪૪ નું ચોમાસું રાધણપુરમાં કર્યું

**तत्र स्थित्वा जलदसमयं निर्मितं तेन शास्त्रं ।**
**विद्वन्मान्यं सपदि च चतुर्थस्तुतेर्निर्णयाख्यम् ४८**

॥ शिष्यैरिति ॥ अथोऽथानंतर सैष मुनिपतिरपि श्री विजयानंदो मुनीश्वरोऽपि पादलिप्तात्पालिताना इतिख्यातनगराद्विहृत्य स्वचरणे प्रचाल्यार तूर्णं राधनपुर राधनपुराभिध नगरमागादागच्छत् । किं विशिष्टो मुनिपतिरित्याह । शिष्यैर्युक्त परिवारै समन्वितः । पुन. किं विशिष्ठो भव्यलोकोपकारी । भव्या मोक्षार्हा ये लोका जनास्तेषामुपकारी हितकारक । च पुनस्तत्र तद्राधनपुराख्यनगरे जलदकालं वर्षर्तुयावत्स्थित्वा स्थिरीभूय तेनैतेन मुनींद्रेण सपदि चपलं । नतु शनै शनै । अनेनास्य मुनीशस्य बुद्धे परमप्राबल्यं ध्वनितं । चतुर्थस्तुतेर्निर्णयाख्यं । राजेंद्रसूरिगर्वपर्वतपवितुल्यं चतुर्थस्तुतिनिर्णयाभिध शास्त्रं निर्मितं रचितं । किंविशिष्ठ तच्छास्त्रमित्याह । विद्वन्मान्य । विद्वद्भिः प्राज्ञैर्मान्यं माननीयं पूज्य प्रशस्यमितियावत् । अनेन तस्य शास्त्रस्य परमाप्तत्व ध्वनितमिति ॥

हवे भव्यलोकोने उपकार करनारा ते **श्री विजयानंद मुनिराज पालीताणाथी** विहार करीने तुरत **राधनपुर** आव्या , वळी त्यां चोमासुं रहीने तेमणे तुरत विद्वानोने माननीक एवुं **चतुर्थस्तुतिनिर्णय** नामनुं शास्त्र बनाव्यु

**सुचारित्राचारे गतमिह सुचारित्रविजयं ।**
**मम ज्ञानांभोजे तनुलतरतारुण्यतरणिम् ॥**
**गुरुं नत्वा तं तत्सुगुरुविजयानंदचरिते ।**
**मया सर्गोऽङ्काकः कविशिशुकहीरेण कथितः ॥४९॥**

"अङाक." एटले अगीयारमो (बाकीनो सघळो अर्थ आगळ प्रमाणेज जाणवो.)

इति श्रीजामनगरनिवासिश्रावकवर्यहंसराजात्मजपंडितहीरालालविरचिते श्रीविजयानंदाभ्युदयाख्ये महाकाव्ये अपरनामसूरीश्वरश्रीमदात्मारामजिच्चरिते तस्य पादलिप्तपुरागमन सूरिपदप्राप्ति भक्तामरपादपूर्तिरूपतत्स्तुतिवर्णनो नाम एकादशमः सर्गः समाप्तः ॥श्री॥

## ॥ द्वादशमः सर्गः प्रारभ्यते ॥

एवं स्थित्वा चतुर्मासं । तत्र धर्मपरायणः ॥
विहृत्य च ततो यातो । ऽह्मदावादं क्रमेण सः ॥१॥

એવી રીતે ધર્મમા તત્પર રહેલા તે મુનિરાજ ત્યાં (રાધનપુરમાં) ચતુર્માસ રહીને, તથા ત્યાંથી વિહાર કરીને અનુક્રમે અમદાવાદ ગયા

मुनीशस्यास्य नेत्रे यो । ऽभवद्रोगः पुरातनः ॥
सोऽधुना धर्मकार्येषु । विघ्नकारो बभूव च ॥ २ ॥

આ મુનિરાજના નેત્રમા પૂર્વે જે રોગ થયો હતો, તે હવે ધર્મકાર્યમાં વિઘ્ન કરવા લાગ્યો

तं त्रिभुवनदासाख्यो । नेत्रवैद्यशिरोमणिः ॥
नानौषधोपचारेण । रोगं दूरेऽकरोन्मुनेः ॥ ३ ॥

મુનિરાજના તે રોગને નેત્રવૈદ્યોમાં શિરોમણિ એવા ત્રિભુવનદાસ નામના વૈદ્યે નાના પ્રકારના ઔષધોના ઉપચારથી દૂર કર્યો.

विहृत्येतः समायातो । मुनींद्रोऽसौ क्रमेण च ॥
श्रीमेसाणाह्वयं ग्रामं । चतुर्मासं स्थितो मुदा ॥४॥

અહીંથી વિહાર કરીને આ મુનિરાજ અનુક્રમે શ્રી મેસાણા નામના ગ્રામપ્રતે આવ્યા, તથા ત્યાં હર્ષથી ચતુર્માસ રહ્યા.

यूरोपदेशवास्तव्यो । होर्नलाख्यश्चिकित्सकः ॥
पप्रच्छ कतिचित्प्रश्नान् । जैनोदंतात्रये च तम् ५

વળી (ત્યાં) તે મુનિરાજને યૂરોપ દેશમાં રહેનારા હોર્નલ નામના ડૉક્ટરે કેટલાક જૈનધર્મ સંબંધિ પ્રશ્નો પૂછ્યા.

मुनीशेनापि संप्रोक्ता । उत्तरास्तस्य तोषदाः ॥
तेन सोऽपि मुदं यातो । ऽशंसच्च तं मुनिं बहु ॥६॥

(તે) શ્રી આત્મારામજી મુનિરાજે પણ તેને (પ્રશ્નોના) સંતોષકારી ઉત્તરો આપ્યા, તેથી તે પણ હર્ષિત થયો, અને તે મુનિરાજની બહુ પ્રશંસા કરવા લાગ્યો.

ततो निर्गत्य तारंग । तीर्थयात्रां विधाय च ॥
पालणपुरमागत्य । स्थितस्तत्र सुखेन सः ॥ ७ ॥

ત્યાંથી નિકળીને, તથા તારંગાજીની તીર્થયાત્રા કરીને તે પાલણપુર આવીને ત્યાં સુખેથી રહ્યા.

तत्र सप्तजनान् दीक्षां । वैराग्यांचितचेतसः ॥
ददौ सैष मुनीशस्तु । परोपकृतिपंडितः ॥ ८ ॥

ત્યાં પરોપકાર કરવામાં વિચક્ષણ એવા આ મુનિરાજે, વૈરાગ્યથી શોભિતા ચિત્તવાળા એવા સાત માણસોને દીક્ષા આપી.

ततो निर्गत्य मौनींद्रो । गतोऽसावर्बुदाचलम् ॥
तत्र यात्रां विधायागा । ज्जोधपुराभिधं पुरम् ॥ ९ ॥

त्यांथी आ मुनिराज निकळीने आबुपर्वतपर गया; (तथा) त्यां यात्रा करीने जोधपुरमा आव्या

ज्ञात्वा विद्वच्छिरोरत्नं । मुनीशं तं च भारते ॥
भव्यलोकोपकर्त्तारं । समतांचितमानसम् ॥ १० ॥
अंग्लराजा ददौ तस्मै । बहुमानपुरस्सरम् ॥
पुस्तकानीह वेदानां । प्राभृते च निजेच्छया ॥११॥
॥ युग्मम् ॥

ते श्री आत्मारामजी मुनिराजने भरतखंडमा विद्वानोना शिरोमणि, भव्य लोकोनो उपकार करनारा, तथा समताथी शोभिता मनवाळा जोइने अही (जोधपुरमां) अंग्रेज सरकारे पोतानी इच्छाथी बहुमानपूर्वक तेमने वेदोनां पुस्तको भेट तरिके आप्या

ततो द्रुतं स मालेर । कोटलाभिधपुर्वरम् ॥
परीवारैः सहायातो । राजोडुभिरिवांबरम् ॥ १२ ॥

पछी ते मुनिराज तुरत तारा‍ओ सहित चंद्र जेम आकाशमा, तेम परिवार सहित मालेरकोटडा नामना उत्तम नगरमा आव्या.

चतुर्मासावधिं स्थित्वा । तत्र धर्मपरो मुनिः ॥
विहृत्य स ततस्तूर्णं । अमृतसरमाययौ ॥ १३ ॥

त्यां धर्ममां तत्पर थया थका ते मुनिराज चतुर्मास सुधि रहीने तुरत अमृतसरमां आव्या

तत्र तस्योपदेशेन । श्रावकैर्जिनमंदिरम् ॥
निर्मितं यत्पुरा तस्य । प्रतिष्ठा तेन कारिता ॥१४॥

त्यां तेमना उपदेशथी श्रावकोए जे पहेलां जिनमंदिर कर्युं हतुं, तेनी तेमणे प्रतिष्ठा करावी

निर्गत्येतः समागत्य । पल्लीनामपुरं वरम् ॥
चतुर्मासं च तत्रास्था । च्छिष्यैः संसेवितो मुनिः १५

ત્યાથી નિકળીને, પલ્લી નામના ઉત્તમ નગરમા આવીને, શિષ્યોથી સેવાએલા તે મુનિરાજ ચતુર્માસ રહ્યા

तत्रैकः श्रावकोऽपृच्छ । न्मुनीशं तं प्रणम्य च ॥
स्वामिन्कतिमता मह्या । मीश्वरं जगतोऽनिशम् १६
कर्तारं कथयंति य । न्निजशास्त्रपरायणाः ॥
तत्तु सत्यमसत्यं वा । प्रसद्य कथयंतु मे ॥ १७ ॥

॥ युग्मम् ॥

ત્યા એક શ્રાવક તે મુનિરાજને નમસ્કાર કરીને પૂછવા લાગ્યો, કે હે સ્વામી! પોતપોતાના શાસ્ત્રોમા તત્પર થએલા કેટલાક મતો હમેશા ઈશ્વરને જગત્કર્તા કહે છે, તે સત્ય છે કે, અસત્ય છે? તે આપ કૃપા કરીને મને કહો?

तच्छ्रुत्वाथ मुनींद्रोऽपि । तं जगाद सुधानिभाम् ॥
वाचं मिथ्यात्वनाशैक । दक्षां जिनविभाषिताम् १८

તે સાભળીને હવે (તે) મુનિરાજ પણ અમૃત સરખી, તથા મિથ્યાત્વનો નાશ કરવામાં સમર્થ એવી જિનોએ કહેલી વાણી બોલવા લાગ્યા

नास्ति कोऽपि जगत्कर्ता । दृश्यते तत्त्वनादिकम् ॥
जगत्यत्र सदा ज्ञेयाः । सर्वे भावाः स्वभावजाः १९

જગત્કર્તા કોઇ પણ નથી, તે તો અનાદિ દેખાય છે, અને આ જગતમાં સર્વે પદાર્થો સ્વભાવથી ઉત્પન્ન થએલા જાણવા

ये मता भूवि मन्यंत । ईश्वरं सृष्टिकारकम् ॥
ते मिथ्यात्विमता नित्यं । विज्ञेयाः सुविचक्षणैः २०

પૃથ્વીમા જે મતો ઇશ્વરને સૃષ્ટિકર્તા માને છે, તે મતોને ઉત્તમ વિચક્ષણ

માણસોએ હમેશા મિથ્યાત્વિ મતો જાણવા.

यदीश्वरं हि कर्तारं । भुवि मन्यामहे वयम् ॥
तदा भवेत्त्वहोऽस्माकं । स्वयं कूपनिपातनम् ॥२१॥

જ્યારે આપણે પૃથ્વીમા ઇશ્વરને કર્તા માનીએ, તો તો અહો! આપણું પોતાનીજ મેળે કુવામા પડવાપણુ થાય.

इमे परे तु मन्यंते । कर्तारं सर्ववस्तुनः ॥
ईश्वरं तत्कथं च स्या । दुपादानंविना ध्रुवम् ॥ २२ ॥

આ અન્યદર્શનીઓ ઇશ્વરને સર્વ વસ્તુના કર્તા માને છે, તે ખરેખર ઉપાદાનવિના શી રીતે થઇ શકે?

उपादानमृते न स्या । त्कार्यं किमपि जातुचित् ॥
शशकानां हि शृंगाणि । को विदग्धो वदेदिह २३

ઉપાદાનવિના કઇ પણ કાર્ય કોઇ પણ સમયે થઇ શકતુ નથી, કેમકે અહી કયો ચતુર માણસ સસલાઓને શિંગડા કહે?

जगत्तेहि विजानंति । सर्वमीशमयं सदा ॥
तत्तद्वाक्यं तु तेषां हि । सदा बाधाप्रदायकम् ॥२४॥

તે (અન્યદર્શનીઓ) હમેશા ખરેખર સર્વ જગતને "ઇશ્વરમય" માને છે, તેઓનુ તે વાક્ય તેઓનેજ હમેશા બાધા આપનારૂં છે

यतो लोके हि दृश्येते । धर्माधर्मौ सुखापदौ ॥
पुण्यपापे तथा स्वर्ग–नरकौ रंकभूमिपौ ॥ २५ ॥

કેમકે જગતમા ખરેખર ધર્મ અને અધર્મ, સુખ અને દુઃખ, પુણ્ય અને પાપ, સ્વર્ગ અને નરક, રંક અને રાજા દેખાય છે

कर्तारं तु सदा तेषां । मन्यंते यदि ते प्रभुम् ॥
तदेश्वरः स्वयं हि स्या । त्स्वस्यैवेह विनाशकः ॥२६॥

તે સઘળાઓના કર્તા જ્યારે તેઓ હમેશાં ઇશ્વરને માને છે, ત્યારે તો અહીં ઇશ્વર ખરેખર પોતાનોજ નાશ કરનારો થાય

तथा चैवं वदंत्येते । वेदानामपि कारकम् ॥
ईश्वरं हि वचस्तेषां । तदपि दोषपोषकम् ॥ २७ ॥

વળી એવીજ રીતે તેઓ ઇશ્વરને વેદોના પણ કર્તા માને છે, તેઓનું તે વચન પણ ખરેખર દોષોને પોષનારૂં છે

यतो वेदा यदा तेन । प्रोक्ता ज्ञानस्य हेतवे ॥
अज्ञान्येव तदा सोऽपि । यतो जगत्तुतन्मयम् ॥२८॥

કેમકે જ્યારે તેને જ્ઞાન માટે વેદો કહ્યા, ત્યારે તો તે ઇશ્વર પણ અજ્ઞાનીજ ઠર્યો, કેમકે, જગતતો તેનામયજ છે

कथयेयुः पुनश्चैवं । यदि तेऽन्यमतास्थिताः ॥
शक्तिमानेव हीशोऽत्र । नोपादानमपेक्षते ॥ २९ ॥
तेषां तद्वचनं को हि । वंध्यापुत्रनिभं खलु ॥
मन्येतात्र सदा मह्यां । न्यायान्यायविचारवान् ३०

॥ युग्मम् ॥

વળી તે અન્યદર્શનીઓ કદાચ એમ કહે કે, અહી તે ઇશ્વર શક્તિમાનજ છે, ઉપાદાનની અપેક્ષા કરતો નથી ; તો તેઓનુ તે ખરેખર વંધ્યાપુત્ર સરખું વચન, હમેશા ( આ ) પૃથ્વીમા ન્યાય અન્યાયના વિચારને જાણનારો કયો માણસ માને ? ( અર્થાત્ કોઇ પણ ન માને )

वदेयुर्यदिचेन्मह्यां । वस्तुजातं निरीक्ष्यते ॥
प्रत्यक्षेशमयं सर्वं । तदप्येषां सदोषकम् ॥ ३१ ॥

વળી કદાચ ( તેઓ ) એમ કહે કે, સર્વ વસ્તુ પ્રત્યક્ષ ઇશ્વરમય દેખાય છે, તે પણ તેઓનુ ( કહેવુ ) દૂષણવાળુ છે

यतो वेदैरिति प्रोक्तं । संमतैस्तु सदैव तैः ॥
ईश्वरं कोऽपि नो शक्तः । कर्तुं हि दृष्टिगोचरम् ३२

કેમકે તેઓએ હમેશા માનેલા એવા વેદોએ એમ કહ્યું છે કે, ઇશ્વરને દ્રષ્ટિગોચર કરવાને ખરેખર કોઇ સમર્થ નથી

किंच ते ह्यत्र प्रष्टव्या । य ईशेन रसातले ॥
देहिनो निर्मलास्तेवा । मलिना वा विनिर्मिताः ३३

વળી તે અન્યદર્શનીઓને અહી (એમ) પૂછવુ કે, ઇશ્વરે જે પ્રાણીઓને અહી પૃથ્વીપર બનાવ્યા છે, તે ( તેણે ) નિર્મળ કે મલીન બનાવ્યા ?

यदि ते निर्मला नित्यं । तदा वेदा हि किं कृताः ॥
मालिन्यस्यापनोदाय । देहिनामीश्वरेण ते ॥ ३४ ॥

જો તે પ્રાણીઓને હમેશા નિર્મળ બનાવ્યા, તો તેઓની મલીનતા દૂર કરવા માટે ઇશ્વરે ખરેખર તે વેદોને શામાટે બનાવ્યા ?

जडा अपि हि तत्कार्यं । पिष्टपेषणसंनिभम् ॥
कुर्वंति नो कदाप्यत्र । तदेशस्य तु का कथा ॥३५॥

આ દુનિયામા પિષ્ટપેષણ સરખુ તેવુ કાર્ય મૂર્ખો પણ ખરેખર કોઇ વખતે પણ કરતા નથી, ત્યારે ઇશ્વરની તો વાતજ શી ?

किंचात्र कथयेयुस्ते । य ईशेन तु निर्मिताः ॥
निर्मला एव ते लोका । मालिन्यं तु स्वयं गताः ३६

વળી તે અન્યદર્શનીઓ એમ કહે કે, ઇશ્વરે જે માણસોને બનાવ્યા છે, તે તો નિર્મલજ છે, અને ( તેઓ ) પોતાની મેળેજ મલીનતાને પ્રાપ્ત થયા છે.

तदपि हि वचस्तेषां । तेषामेवापदां प्रदम् ॥
यतोऽसावीश्वरःस्वस्या । भवन्मालिन्यदःस्वयम् ३७

તેઓનું તે વચન પણ તેઓનેજ ખરેખર દુ:ખદાયિ છે; કેમકે ( તેથી

તો) આ ઇશ્વર પોતાને પોતાની મેળેજ મલીનતા આપનારો થયો

यदिचेत्कथयेयुस्ते । पापवंतो जनाः कृताः ॥
तदा विनापराधेन । तेषां सोऽरे विदारकः ॥ ३८ ॥

વળી કદાચ તેઓ એમ કહે કે, (ઇશ્વરે) પાપી માણસો બનાવ્યા, ત્યારે અરેરે!! અપરાધવિના તેઓનો તે નાશ કરનારો ઠર્યો.

तथा चैवं हि मन्येरं । स्ते स्वस्येश्वरतां खलु ॥
प्रकटयितुमेवेहे–शेन सृष्टिर्विनिर्मिता ॥ ३९ ॥

વળી કદાચ તેઓ એમ માને કે, ઇશ્વરે અહી ખરેખર પોતાનુ ઇશ્વરપણુ પ્રગટ કરવાનેજ સૃષ્ટિ બનાવી છે

तद्वचोऽपीह तेषां तु । नौचित्यमंचति ध्रुवम् ॥
यतः स सृष्टितः पूर्वं । किं मूढ इव संस्थितः ॥४०॥

તેઓનુ તે વચન પણ અહી ખરેખર ઉચિતતાને શોભાવતુ નથી, કેમકે, (ત્યારે) શુ તે ઇશ્વર સૃષ્ટિ (બનાવ્યા) પહેલા મૂઢની પેઠે રહ્યો હતો?

यदिचेत्कथयेयुस्ते । जीवा ईशेन निर्मिताः ॥
स्वर्गसंप्राप्तये त्वत्र । पुण्यकार्ये नियोजितुम् ॥४१॥

વળી કદાચ તેઓ એમ કહે કે, અહી ઇશ્વરે સ્વર્ગની પ્રાપ્તિ માટે પુણ્ય કાર્યમા જોડવા માટે જીવોને બનાવ્યા છે

तदपीह वचस्तेषां । कर्णसूचीसखं सताम् ॥
यांति केचिद्यतः श्वभ्रं । महो तस्योपकारता ॥४२॥

તેઓનું તે વચન પણ અહી વિદ્વાનોને કર્ણસૂચીસરખુ લાગે છે, કેમકે કેટલાક પ્રાણીઓ નરકે જાય છે, માટે અહો! ઇશ્વરનુ ઉપકારીપણુ તો ઘણુ સારૂં!!

कथयेयुर्यदैवं ते । पुण्यपापस्य कारणम् ॥

ईश एव जनास्तत्र । शालभंजिकसंनिभाः ॥४३॥

वळी कदाच तेओ एम कहे के, पुण्य पापनु कारण तो ईश्वरज छे, अने माणसो तो अही पुतळा सरखा छे

तदपि वचनं तेषां । सदा हास्यास्पदं सताम् ॥
यतो जनाः स्वचित्तेन । दृश्यंते कार्यतत्पराः ॥४४॥

तेओनु ते वचन पण हमेशा विद्वानोने हासीना स्थानकरूप छे, केमके माणसो पोताना चित्तथी कार्योमा तत्पर थएला देखाय छे

किंच यदा न कर्तारो । जनाश्च पुण्यपापयोः ॥
नस्युस्तदा तु संसारे । गतयो नरकादयः ॥ ४५ ॥

वळी ज्यारे पुण्य पापना कर्ता लोको न होय, त्यारे संसारमां नरकादिक गतिओ न होय

ता न संति यदा चात्र । संसारोऽपि भवेन्नहि ॥
संसारोऽपि यदा नस्या । च्छास्त्राणामप्यसंभवः ४६

वळी ज्यारे अहीं ते गतिओ न होय, त्यारे खरेखर संसार पण न होय, अने ज्यारे संसार न होय, त्यारे शास्त्रोनो पण असंभव होय.

शास्त्राण्यपि यदा न स्यु । रुपदेशो भवेन्न च ॥
उपदेशो यदा न स्या । दुर्लभोऽप्युपदेशकः ॥४७॥

ज्यारे शास्त्रो पण न होय, त्यारे उपदेश पण न होय, अने ज्यारे उपदेश न होय त्यारे उपदेशक पण दुर्लभ होय

यद्युपदेशको न स्या । दीश्वरस्य कथा तु का ॥
एवं तु परितो नित्यं । शून्यतैव ह्युपागता ॥ ४८ ॥

ज्यारे उपदेशक न होय, त्यारे ईश्वरनी तो वातज शी करवी? अने एवी रीते तो चारे बाजुथी खरेखर हमेशां शून्यपणुंज प्राप्त थयुं.

किंचैवं कथयेयुस्ते । यदीशः खेलकारकः ॥
स्वेच्छयैव जगज्जंतून् । क्रीडां कारयति स्वयम् ४९
तद्वचोऽपीह तेषां तु । विरुद्धं प्रतिभासते ॥
क्रीडायै स ह्यतः स्वस्य । जनानां दुःखदो भवेत् ५०
॥ युग्मम् ॥

વળી કદાચ તેઓ એમ કહે કે, ઈશ્વર તો બાજીગર છે, અને (તે) પોતાની ઇચ્છાથીજ પોતાની મેળે જગતના પ્રાણીઓને ક્રીડા કરાવે છે, તેવી રીતનુ તેઓનુ વચન પણ અહીં વિરૂદ્ધ દેખાય છે, કેમકે આથી તો તે પોતાની ક્રીડામાટે લોકોને દુખ દેનારો થાય

एवं यदीश्वरो दत्ते । स्वयमेवापदं जनान् ॥
तदा सोऽपीह पापी स्या । द्रागी द्वेषी तथा स्फुटम् ५१

એવી રીતે ઈશ્વર જ્યારે પોતેજ લોકોને દુખ દીએ છે, ત્યારે તો તે ઈશ્વર પણ અહીં પાપી તથા પ્રગટ રીતે રાગી અને દ્વેષી થાય

यदा रागी च विद्वेषी । स्वयमेवेश्वरो भवेत् ॥
तदा तमीश्वराह्वेन । मुग्धोऽपि कथयेन्नहि ॥ ५२ ॥

(એવી રીતે) જ્યારે ઈશ્વર પોતેજ રાગી અને દ્વેષી થાય, ત્યારે તેને મુગ્ધ માણસ પણ ઈશ્વરના નામથી ખરેખર કહે નહી.

वदेयुर्यदि ते चैवं । यथा जीवः करोति यः ॥
पुण्यपापे तथेशोऽपि । दत्ते दंडं तमेव हि ॥ ५३ ॥

વળી તેઓ કદાચ એમ કહેકે જે જીવ જેવી રીતે પુણ્યપાપ કરે છે, તેવી રીતે ઈશ્વર પણ તેનેજ ખરેખર દંડ આપે છે

वाक्यमेतत्तु तेषां हि । तेषामेव विनाशकम् ॥
यतस्तेन तु संसारो । ऽनादिर्बभूव निश्चितम् ५४

તેઓનુ તે વાક્ય પણ ખરેખર તેઓનેજ નાશ કરનારૂ છે, કેમકે, તેથી તો ખરેખર સ સાર અનાદિ ઠર્યો

यतो यथा जनः पूर्वे । भवे कर्म करोति हि ॥
तथैवेह फलं सोऽपि । लभतेऽसंशयं सदा ॥५५॥

કેમકે પૂર્વ ભવે માણુસ જેવુ કર્મ કરે છે તેવીજ રીતે અહીં તે પણ હમેશા સ શય રહિત ફળ મેળવે છે

यदैवं ते हि मन्येरन् । भवानां च परंपराम् ॥
तदायं तु स्वयं सिद्धः । संसारो ह्यादिवर्जितः ॥५६॥

એવી રીતે જ્યારે તેઓ ભવોની પર પરા માને, ત્યારે આ સ સાર તો પોતાની મેળેજ અનાદિ સિદ્ધ થયો

श्रुत्वैवं स पुनः प्राह । श्रावकोऽपि गुरुं मुदा ॥
स्वामिन् मया श्रुतं तत्तु । जगदिदमकर्तृकम् ५७

એવી રીતે સાભળીને તે શ્રાવક પણ ફરીને ગુરૂને હર્ષથી કહેવા લાગ્યો કે, હે સ્વામી! આજગત્ કર્તારહિત ( અર્થાત્ અનાદિ ) છે, તે તો મે સાભળ્યું.

किंतु ये नास्तिकाः संति । ते नित्यं निजमानसे ॥
जीवं स्वर्गं तथा श्वभ्रं । मन्यंते हि कदापि न ५८

પણ જેઓ નાસ્તિક છે, તેઓ હમેશા પોતાના મનમા કોઇ દહાડો પણ જીવ, સ્વર્ગ કે નર્ક માનતા નથી

मुनींद्रोऽथ जगादैवं । नास्तिकास्ते हि धूर्तकाः ॥
वंचयित्वा सदा लोकान् । कुमार्गे पातयंति च ५९

હવે તે શ્રી આત્મારામજી મુનિરાજ એમ કહેવા લાગ્યા કે, તે નાસ્તિકો ખરેખર ઠગારા છે, અને તેઓ હમેશા લોકોને ઠગીને કુમાર્ગમા પાડે છે,

प्रथमं तन्मतस्याथ । स्वरूपं वच्मि तच्छृणु ॥

मन्यंते नैव ते लोका । आत्मानं च पुनर्भवम् ६०

હવે પેહેલા તે નાસ્તિકમતનુ હુ સ્વરૂપ કહુછુ, તે તુ સાભળ? તે નાસ્તિક લોકો આત્માને અને પુનર્ભવને માનતા નથી

मन्यंते सर्वदा ते तु । शरीरं निर्मितं ध्रुवम् ॥
मह्यादिपंचभूतेभ्यो । नास्तिका लोकवंचकाः ॥६१॥

લોકોને ઠગનારા તે નાસ્તિકો તો હમેશા શરીરને ખરેખર પૃથ્વી આદિક પચ ભૂતોથી બનેલુ માને છે.

यथा पिष्टान्ननीराद्यै । र्मद्यशक्तिः प्रजायते ॥
तथैव पंचभूतेभ्य । श्चेतनापि प्रजायते ॥ ६२ ॥

જેમ પિષ્ટ, અન્ન તથા પાણી આદિકથી મદ્યશક્તિ થાય છે, તેમજ પંચભૂતોથી ચૈતન્યશક્તિ પણ થાય છે

कथयंति तथा ते च । धर्मं स्वस्य वरं भुवि ॥
नारीसंभोगमेवेह । सर्वदाप्यनिवारिताः ॥ ६३ ॥

વળી તે નાસ્તિકો અનિવારિત થયા થકા હમેશા આ જગતમા સ્ત્રીસંભોગનેજ પોતાનો ઉત્તમ ધર્મ કહે છે

दुहितृभगिनीमात्रा । दिभिरपि सदैव ते ॥
ध्रुवं कुर्वंति संभोगं । निर्भयं नीचनास्तिकाः ॥६४॥

વળી તે નીચ નાસ્તિકો હમેશા ભયરહિત ખરેખર દીકરી બેહેન તથા માતા આદિકની સાથે પણ સભોગ કરે છે

नास्तिका भक्षयंत्यत्र । पललं राक्षसा इव ॥
पिबंति च सदा मद्यं । निंदितं हि विचक्षणैः ६५

વળી અહી નાસ્તિકો રાક્ષસોની પેઠે માંસભક્ષણ કરે છે, તથા હમેશાં વિચક્ષણોએ નિંદેલુ એવુ મદ્ય પીએ છે

एवं संक्षेपतः प्रोक्तो । मतस्तेषां मया तव ॥
अधुना तु शृण्वेतेस्य । खंडनं न्यायगर्भितम् ॥६६॥

એવી રીતે હે શ્રાવક! મે તને તે નાસ્તિકોનો મત સક્ષેપથી કહ્યો; હવે તે મતનુ ન્યાયગર્ભિત ખડન તુ સાભળ?

यदीहात्मा न देहेऽस्ति । सुखदुःखे च वेत्ति कः ॥
ततः सदा स्वसंवेद्य । आत्मात्वस्त्येव निश्चितम् ६७

જો આ શરીરમા આત્મા ન હોય, તો સુખ દુ ખને કોણ જાણે છે? માટે ખરેખર હમેશા "સ્વસ વેદ્ય" આત્મા તો છેજ

यथैवं स्वस्य देहेऽपि । ज्ञायते स तु संस्थितः ॥
तथैव च परेष्वत्र । ज्ञातव्यो निजबुद्धिना ॥ ६८ ॥

એવી રીતે જેમ તે આત્મા પોતાના દેહમા પણ રહેલો જણાય છે, તેમજ પરના દેહોમા પણ પોતાની બુદ્ધિથી જાણી લેવો

किंच ते कथयंत्यत्रा–न्यलोकस्याप्यसंभवः ॥
तद्वचस्तु सदा तेषां । प्रमाणस्याप्यगोचरम् ॥६९॥

વળી તેઓ અહી પરલોકનો પણ અસ ભવ કહે છે; તેઓનુ તે વચન પણ હમેશા પ્રમાણને પણ અગોચર છે

विनान्यभवसंस्कारं । जातमात्रो हि बालकः ॥
कथं जातो विना शिक्षां । ध्रुवं मातृस्तनंधयः ७०

કેમકે પરભવના સસ્કાર વિના તુરતનો જન્મેલો બાળક શિખામણવિના ખરેખર માતાના સ્તનને કેમ ધાવવા લાગ્યો?

ततोऽत्रान्यभवास्तित्वं । दृश्यते निश्चितं सदा ॥
विपश्चिद्भिरपि ह्येवं । सर्वैरंगीकृतं मुदा ॥ ७१ ॥

તેથી અહીં પરભવનુ હોવાપણુ હમેશા ખરેખર દેખાય છે, અને સર્વ

પંડિતોએ પણ એવીજ રીતે ખરેખર હર્ષથી અંગીકાર કરેલું છે

तथा यत्ते वदंत्येवं । पंचभूतैश्च चेतना ॥
मद्यशक्तिरिवावन्यां । तदप्यत्रासमंजसम् ॥ ७२ ॥

વળી તેઓ જે એમ કહે છે કે, આ પૃથ્વીમાં જેમ મદ્યશક્તિ તેમ પંચભૂતોથી ચૈતન્યશક્તિ થાય છે, તે વચન પણ અસમંજસ છે

यतः पूर्वं तु दृष्टांतो । नौचितिमंचति ध्रुवम् ॥
मद्यशक्तिस्त्वचैतन्या । जीवस्त्वत्र सचेतनः ॥७३॥

કેમકે પેહેલાં તો તે દૃષ્ટાંતજ ખરેખર ઉચિત નથી; કેમકે મદ્યશક્તિ તો અચેતન છે, અને જીવ તો અહીં સચેતન છે

किंच तेषु न पश्यामः । पृथक्केषु हि चेतनाम् ॥
एवं मूलं न यस्यास्ति । शाखायास्तु कथापि का ७४

વળી તે જુદા જુદા પૃથ્વી આદિક પંચભૂતોમાં અમો ખરેખર ચૈતન્યશક્તિ જોતા નથી, અને એવી રીતે જેનું મૂલ નથી, તેની શાખાની તો વાત પણ ક્યાથી હોય?

स्त्रीसंभोगं सदा धर्मं । किंच ते कथयंति यत् ॥
तद्वाक्यमिह मूढोऽपि । न्यक्करिष्यति सर्वदा ७५

વળી તેઓ હમેશાં "સ્ત્રીસંભોગને" જે ધર્મ કહે છે, તે વાક્યને અહીં મૂઢ માણસ પણ હમેશાં ધિક્કારી કહાડશે

मात्रादिभिश्च संभोगो । नैचैरपीह निःकृतः ॥
तत्तु भुवि प्रकुर्वाणा । नीचकेभ्योऽपि नीचकाः ७६

માતા આદિકની સાથેનો સંભોગ અહીં નીચ માણસોએ પણ તિરસ્કારેલો છે, અને તેવી રીતનો સંભોગ કરનારાઓ તો આ પૃથ્વીમાં નીચથી પણ નીચ છે

मदिरामांसभोज्यं तु । सदाऽनिष्टं भुवि स्मृतम् ॥
ये सदा तत्प्रभोक्तार । श्चांडालेभ्योऽपि तेऽधमाः ७७

મદિરામાંસનું ભક્ષણ તો પૃથ્વીમાં હમેશાં અનિષ્ટ જણાએલું છે, અને તેઓનું જેઓ હમેશાં ભક્ષણ કરે છે, તેઓ તો ચાંડાલોથી પણ અધમ છે.

श्रुत्वेति श्रावकः प्राह । मुनींद्र भवतो ध्रुवम् ॥
नास्तिकानां दुराचारः । श्रुतोऽयं हि मुदा मया ७८

એવી રીતે સાંભળીને (તે) શ્રાવક કહેવા લાગ્યો કે, હે મુનીંદ્ર! તમારી પાસેથી મેં નાસ્તિકોનો આ દુરાચાર હર્ષથી ખરેખર સાંભળ્યો.

अधुनाऽद्वैतमार्गस्य । च्छामि श्रोतुं स्वरूपकम् ॥
तत्प्रसीद्य मयि नाथ । यूयं वक्तुं समार्हथ ॥७९॥

હવે હું અદ્વૈતમાર્ગનું સ્વરૂપ સાંભળવાને ઇચ્છું છું, તેથી હે નાથ! મારાપર કૃપા કરીને તે આપ કહેવાને યોગ્ય છો.

मुनींद्रोऽपि जगादाथ । शृणु श्रावक तन्मतम् ॥
ते मन्यंते सदा त्वत्र । सर्वं ब्रह्ममयं जगत् ॥८०॥

હવે તે શ્રી આત્મારામજી મુનિરાજ પણ કહેવા લાગ્યા કે, હે શ્રાવક! તેઓનો મત તું સાંભળ? તેઓ હમેશાં અહીં સર્વ જગતને બ્રહ્મમય માને છે.

एवं कथयतां तेषां । नास्तिकत्वमुपागतम् ॥
यतो यदा जगत्सर्वं । मतं ब्रह्ममयं च तैः ॥ ८१ ॥
तदा कोऽपि न पापी स्या । द्धर्मी चापि भवेन्नहि ॥
नच ज्ञानी नचाज्ञानी । न श्वभ्रं न त्रिविष्टपम् ८२
न साधुर्नच नीचोऽपि । नच मांसान्नभक्षकः ॥
नच स्वललनाभोक्ता । नचान्यस्त्रीविलासकः ॥८३॥

यतो ब्रह्ममयं सर्वं । तदा सर्वं समं स्थितम् ॥
नच तेषां हि कस्यापि । भेदो विज्ञायते भुवि ८४

॥ चतुर्भि कलापकम् ॥

એમ કહેતા એવા તે અન્યદર્શનીઓને નાસ્તિકપણુ પ્રાપ્ત થયુ ; કેમકે, જ્યારે તેઓએ સર્વ જગતને બ્રહ્મમય માનેલુ છે, ત્યારે કોઇ પણ પાપી, ધર્મી, જ્ઞાની, અજ્ઞાની, નરક, સ્વર્ગ, ઉત્તમ, નીચ, માસભક્ષી, અન્નભક્ષી, સ્વસ્ત્રી ભોગવનાર, કે પરસ્ત્રી ભોગવનાર હોતો નથી , કેમકે જ્યારે સર્વ બ્રહ્મમય છે, ત્યારે સઘળુ તુલ્ય રહેલુ છે, અને તેથી તેઓમા કોઇનો પણ દુનીયામા ભેદ જણાતો નથી

यदि चेत्कथयेयुस्ते । मायामयमिदं तु तत् ॥
ब्रह्म तु शुद्धरूपं तत् । तदपीहासमंजसम् ॥ ८५ ॥

વળી કદાચ તેઓ એમ કહે કે, તે તો ( સર્વ ) માયારૂપ છે ; અને તે બ્રહ્મ તો શુદ્ધરૂપ છે ; તે વચન પણ અહી અસમંજસ છે

यतोऽत्रार्थे तु पृष्टव्या । स्तेचाऽद्वयविवादिनः ॥
युष्माभिर्यामता माया । सा तद्ब्रह्ममया न वा ॥८६॥

કેમકે, તે સબધમા તે અદ્વયવાદિઓને પૂછવું કે, તમોએ જે માયા માનેલી છે, તે માયા બ્રહ્મમય છે કે નહિ ?

यदि भिन्नां वदेयुस्ते । तदा सास्ति जडा न वा ॥
यदि जडां च मन्येरं । स्तदा नित्यास्तिसा न वा ८७

કદાચ તેઓ તે માયાને ( બ્રહ્મથી ) ભિન્ન કહે, ત્યારે તે જડ છે કે નહી ? અને કદાચ તેઓ તેને જડ માને, તો તે માયા નિત્ય છે કે નહી ?

कथयेयुर्यदा नित्या । मद्वैतं तु गतं स्वयम् ॥
यतो ब्रह्म च माया च । द्वावपि संस्थितौ ध्रुवौ ८८

કદાચ તેઓ તે માયાને નિત્ય કહે, તો ( તેઓનુ ) અદ્વૈતપણુ પોતાની

મેળેજ ચાલ્યુ ગયું, કેમકે, બ્રહ્મ અને માયા બન્ને નિશ્ચલ રહ્યા

वदेयुर्यदि मायां ते । तामनित्यां सदा भुवि ॥
तथाप्यद्वैतता तेषा । मेवमेव च संस्थिता ॥ ८९ ॥

કદાચ તેઓ તે માયાને પૃથ્વીમા હમેશા અનિત્ય કહે, તોપણ તેઓનું અદ્વૈતપણું તેમનુ તેમજ રહ્યુ

यतो विनश्वरं यद्यत् । तत्तत्कार्यस्वरूपकम् ॥
यद्यत्कार्यस्वरूपं तत् । कारणस्यैव गोचरम् ॥ ९० ॥

કેમકે, જે જે વિનશ્વર છે, તે તે કાર્યસ્વરૂપ છે; અને જે જે કાર્યસ્વરૂપ છે, તે કારણનેજ ગોચર છે

तदा तस्यास्तु मायाया । भवितव्यमथो ध्रुवम् ॥
कारणं तु किमप्यत्र । सदोपादानसंज्ञकम् ॥ ९१॥

ત્યારે તે માયાનુ પણ અહી ખરેખર હમેશા ઉપાદાન સજ્ઞાવાળું કંઇ પણ કારણ હોવુ જોઇએ

यदिचेच्च वदेयुस्ते । मायाया इह कारणम् ॥
परा मायैव तस्याश्च । तत्त्वनवस्थितं ध्रुवम् ॥ ९२ ॥

વળી કદાચ તેઓ કહે કે, તે માયાનુ કારણ અહીં બીજી માયાજ છે; તો તેમા ખરેખર અનવસ્થા દોષ આવ્યો

यदि तत्कारणं ब्रह्म । मन्येरंस्ते सदैव च ॥
तदा दोषश्च पूर्वोक्तः । स्वयमेवेह संस्थितः ॥ ९३ ॥

વળી કદાચ તેઓ હમેશા બ્રહ્મને તે માયાનું કારણ માને, ત્યારે અહીં પૂર્વોક્ત દોષ પોતાની મેળેજ આવીને ઉભો

एवमद्वैतमार्गस्य । स्वरूपं सर्वथा जनैः ॥
विज्ञेयं मानसे नित्यं । न्यायान्यायविचक्षणैः ॥९४॥

એવી રીતે ન્યાય અન્યાયને જાણનારા માણસોએ હમેશા અદ્વૈત માર્ગનું સર્વથા સ્વરૂપ ( પોતાના મનમાં જાણવુ )

**ततो निर्गत्य संयातो । जीराग्रामं मुनीश्वरः ॥**
**जिनालयप्रतिष्टां चा । कारयत्प्रमुदेह सः ॥ ९५ ॥**

ત્યાથી નિકળીને તે મુનિરાજ **જીરા** નામના ગામમા ગયા, તથા અહીં તેમણે હર્ષથી જિનમંદિરની પ્રતિષ્ટા કરાવી

**ततो द्रुतं स संप्राप्तो । हुशियाराभिधं पुरम् ॥**
**जिनधाम्नः प्रतिष्टा च । तेन तत्रापि कारिता ९६**

ત્યાથી તે તુરત **હુશિયારપુર** નામના નગર પ્રતે ગયા ; અને ત્યા પણ તેમણે જિનમંદિરની પ્રતિષ્ટા કરાવી

**चतुर्मासं स्थितिं तत्र । कृत्वासौ विजहार च ॥**
**समागतो निजैः शिष्यै । र्वेरोवालाभिधं पुरम् ९७**

ત્યા ( હુશિયારપુરમા ) ચતુર્માસ રહીને, તેમણે વિહાર કર્યો, તથા પોતાના શિષ્યો સહિત તે **વેરોવાલ** નામના નગરમા આવ્યા

**अमेरिकाख्यदेशेऽभू । च्चिकागोनाम्नि पुर्वरे ॥**
**तदा प्रदर्शनं लोक–हृच्चमत्कृतिकारकम् ॥ ९८ ॥**

તે સમયે **અમેરિકા** નામના દેશમા રહેલા **ચિકાગો** નામના ઉત્તમ નગરમા લોકોના હૃદયને ચમત્કાર કરનારૂં **પ્રદર્શન** થયુ

**तत्र धर्मसभा जाता । नानापंडितमंडिता ॥**
**जैनधर्मस्य नेतासौ । पत्रेणाकारितस्तया ॥ ९९ ॥**

તે પ્રદર્શનમા વિવિધ પ્રકારના પંડિતોથી શોભિતી થએલી **ધર્મસભા** થઇ ; તે ધર્મસભાએ **જૈનધર્મના મહાન આચાર્ય** એવા આ **શ્રી આત્મારામજી** મુનિરાજને પત્ર મારફતે ત્યા તેડાવ્યા.

३६—जशवत प्रेस, जामनगर.

तदा सोऽचिंतयत्तत्र । यानं मे न हि शोभनम् ॥
यतोऽस्ति तत्र यानं तु । साधुवृत्तिविघातकम् १००

તે વખતે તે શ્રી આત્મારામજી મુનિરાજ વિચારવા લાગ્યા કે, મારે ત્યાં જવું તે ખરેખર લાયક નથી; કેમકે ત્યાં જવુ તે (વચ્ચે સમુદ્ર હોવાથી) સાધુવૃત્તિને વિઘાત કરનારૂ છે

तत्र श्राद्धस्ततः कश्चि । जैनसिद्धांतकोविदः ॥
गच्छेद्यदि तदा जैन—धर्मस्य महिमा भवेत् ॥१०१॥

તેથી ત્યાં જો કોઇ જૈનસિદ્ધાતોને જાણનારો શ્રાવક જાય તો જૈનધર્મની ઉન્નતિ થાય

एवं विचिंतयित्वाथ । मुंबापुर्यां मुनीश्वरः ॥
सोऽबूबुधदुदंतं तं । भारतजैनसंसदे ॥ १०२ ॥

એમ વિચારિને હવે તે મુનિરાજે તે વૃતાત મુંબઇમાં ભારતજૈન-સભાને (ધી જૈન એસોસિએશન ઓફ ઇંડિઆને) જણાવ્યો.

तयापि प्रेषितस्तूर्णं । वीरचंद्राभिधो जनः ॥
मुनीशस्यांतिके तस्य । वाक्पतिरिव धीयुतः ॥१०३॥

તે સભાએ પણ તુરત બૃહસ્પતિ સરખા બુદ્ધિવાન એવા વીરચંદ રા-ઘવજી બી० એ० ને તે મુનિરાજની પાસે તુરત મોકલ્યા

चपलं वीरचंद्रायो । पदिष्टं तेन सूरिणा ॥
जैनसिद्धांततत्वं च । मासावधिना स्वयम् ॥१०४॥

તે શ્રી આત્મારામજી આચાર્ય માહારાજે પોતે તુરત એક મા-સમાજ તે વીરચંદને જૈનસિદ્ધાતોનુ તત્વ કહી બતાવ્યું

प्रतिकृतिं गृहीत्वास्य । मुनींद्रस्य ययौ ततः ॥
वीरचंद्रोऽपि हर्षेण । चीकागोनामपुर्वरम् ॥१०५॥

